॥ टीका ॥

णि तेषु साधवो निपुणाः अव्यसाधवः सव्यसाधवोवा' ऽत स्तेभ्यः' नमोलोएसव्वसाहूणमितिक्वचित्पाठः' तत्र सर्वशब्दस्य देशसर्वतायामपि दर्शना दपरिशेषसर्वतोपदर्शनार्थ मुच्यते' लोके मनुष्यलोके नतु गच्छादौ ये सर्वसाधव स्तेभ्यो नमइति' एषांच नमनीयता मोक्षमार्गसाहायककरणेनो प कारित्वात्' आहच–असहाएसहायत्तं करेंतिमेसंजमंकरेंतस्स । एएणकारणेणं नमामहंसव्वसाहूणंति ॥ १ ॥ ननु यद्ययं संक्षेपेण नमस्कार स्तदा सि द्धसाधूनामेव युक्त स्तद्ग्रहणे न्येषा मप्यर्हदादीनां ग्रहणा द्यतो ऽर्हदादयो न साधुत्वं व्यभिचरन्ति ? अथविस्तरेण तदा ऋषभादिव्यक्तसमुच्चारण तो ऽसौ वाच्यःस्यादिति ? नैवं यतो न साधुमात्रनमस्कारे ऽर्हदादिनमस्कारफल मवाप्यते' मनुष्यमात्रनमस्कारे राजादिनमस्कारफलवदिति' कर्त्त व्यो विशेषतो ऽसौ प्रतिव्यक्तितु नासौ वाच्यो शक्यत्वादेवेति । ननु यथाप्रधानन्याय मङ्गीकृत्य सिद्धादि रानुपूर्वी युक्ता त्र सिद्धानां सर्वथा कृतकृ त्यत्वेन सर्वप्रधानत्वा ? न्नैव मर्हदुपदेशेन सिद्धाना ज्ञायमानत्वा दर्हतामेवच तीर्थप्रवर्त्तनेना त्यन्तोपकारित्वा दित्यर्हदादिरेव सा' नन्वेव माचा र्यादेः सा प्राप्नोति क्वचित्काले आचार्येभ्यः सकाशा दर्हदादीनां ज्ञायमानत्वादिति अतएव तेषामेव चात्यंतोपकारित्वा ? न्नैवं आचार्याणा मुपदे शदानसामर्थ्य मर्हदुपदेशतएव नहि स्वतन्त्रा आचार्यादय उपदेशतो ऽर्थज्ञापकत्व प्रतिपद्यन्ते अतो ऽर्हन्तएव परमार्थेन सर्वार्थज्ञापका स्तथा ऽर्हत्प रिषद्रूपाएवा चार्यादयो ऽत स्ता न्नमस्कृत्यार्हन्नमस्करण मयुक्तं' उक्तच–णयकोइविपरिसाए पणमित्तापणमएरणोत्ति ॥ एवं ताव त्परमेष्ठिनो नम स्कृत्या धुनातनजनानां श्रुतज्ञानस्या त्यन्तोपकारित्वा त्तस्यच द्रव्यभावश्रुतरूपत्वा द्भावश्रुतस्यच द्रव्यश्रुतहेतुकत्वा त्सञ्ज्ञाक्षररूपंद्रव्यश्रुतंनमस्कुर्वन्ना ह ॥ नमोबंभीएलिवीएत्ति ॥ लिपिः पुस्तकादा वक्षरविन्यासः सा चाष्टादशप्रकारापि श्रीमन्नाभेयजिनेन स्वसुताया ब्राह्मीनामिकाया दर्शिता ततो ब्राह्मी त्यभिधीयते' आहच–लेहंलिवीविहाणं जिणेणबंभीएदाहिणकरेण । इत्यतो ब्राह्मीति स्वरूपविशेषणं लिपेरिति' नन्वधिकृतशास्त्रस्यैवमङ्गल

॥ मूल ॥

णमोबंभीएलिवीए

॥ भाषा ॥

रहग्रंथेकहने ? णमोएलिवोए ब्राह्मीलिपिने पुस्तकादिकनेविषे अक्षरस्थापनारूप ते अठारेप्रकारे ऋषभदेवें पोतानीपुत्री ब्राह्मीने देखाडी तेमाटें ब्राह्मी

नो पाधिना उपाधीवा आयो लाभः श्रुतस्य येषां उपाधीनांवा विशेषणानां प्रकर्षा ल्लोभनाना मायो लाभो येभ्यो; ऽथवा उपाधिरेव सन्निधिरेव आयं इष्टफलदैवजनितत्वेन आयाना मिष्टफलानां समूह स्तदेकहेतुत्वा द्येषां; अथवा आधीनां मनःपीडाना मायो लाभ आध्यायः अधियांवा नञः कुत्सार्थत्वा त्कुबुद्धीना मायो ध्यायः ध्यैचिन्तायामित्यस्य धातोः प्रयोगा न्नञः कुत्सार्थत्वा देव दुर्ध्यानंवा अध्याय उपहतो ऽध्याय आध्यायोवा यै स्ते उपाध्याया अत स्तेभ्यो नमस्यता चैषां सुसम्प्रदायातजिनवचनाध्यापनतो विनयेन भव्याना मुपकारित्वादिति ॥ नमोसव्वसाहूणंति ॥ साधयन्ति ज्ञानादिशक्तिभि र्मोक्षमिति साधवः समतावा सर्वभूतेषु ध्यायन्तीति निरुक्तिन्यायात्साधवो यदाह—निव्वाणसाहए जोए जम्हासाहेंतिसाहुणो। समायसव्वभूएसु तम्हातेभावसाहुणो ॥ १ ॥ साहायकंवा संयमकारिणां धारयन्तीति साधवो निरुक्तेरेव सर्वचते सामायकादिविशेषणाः प्रमत्तादयः पुलाकादयो जिनकल्पिक प्रतिमाकल्पिक यथालंदकल्पिक परिहारविशुद्धिकल्पिक स्थविरकल्पिक स्थितकल्पिक स्थितास्थितकल्पिक कल्पातीतभेदाः प्रत्येकबुद्धस्वयंबुद्धबुद्धबोधितभेदा भारतादिभेदाः सुषमदुःखमादिविशेषितावा साधवः सर्वसाधवः सर्वग्रहणंच सर्वेषा गुणवता मविशेषनमनीयताप्रतिपादनार्थं इदंचा र्हदादिपदेष्वपि बोद्धव्यम्' न्यायस्य समानत्वादिति' अथवा सर्वेभ्यो जीवेभ्यो हिताः सार्वा स्तेच ते साधवश्च सार्वस्यवा ऽर्हतो न तु बुद्धादेः साधवः सार्वसाधवः' सर्वान्वा शुभयोगान् साधयन्ति कुर्वन्ति सार्वान्वा र्हतः साधयन्ति तदाज्ञाकरणा दाराधयन्ति प्रतिष्ठापयन्तिवा दुर्नयनिराकरणादिति सर्वसाधवः सार्वसाधवोवा; अथवा श्रव्येषु श्रवणार्हेषु वाक्येषु अथवा सव्यानि दक्षिणा न्यनुकूलानि यानि कार्या



णमोलोएसव्वसाहूणं



णीइ ते उपाध्याय कहीयें ॥ नमोकहतां नमस्कार हूओ केहनेकाजे ? सव्वसाहूण सर्वसाधुनेकाजे जे ज्ञानादि यत्नेंकरी मोक्षमार्ग साधे ते साधु, इहांस येगच्छेतरो सामायिकप्रविशेष अप्रमत्तादिक पुलाकादिक जिनकल्पिक परिहारविशुद्धिकल्पिक प्रतिमाकल्पिक यथालिंगादिकल्पिक प्रत्येकबुद्ध स्वयंबुद्ध बुद्धबोधितप्रमुख वीजापणि जे गुणवत सर्व तेहनें अविशेषेंकरी नमस्कार कह्यो। ए सर्वमोक्षमार्गसहायकरवेंकरी उपगारीछे ॥ नमो कहतां नमस्का

अथवा षिधुसंराद्वाविति वचना त्सिध्यन्तिस्म निष्ठितार्था भवन्तिस्म; अथवा षिधू शास्त्रे माङ्गल्ये चेतिवचना त्सेधन्तिस्म शासितारो ऽभूवन् मङ्गल्यरू पता चानुभवन्तिस्मति सिद्धाः अथवा सिद्धा नित्या अपर्यवसानस्थितिकत्वा त्प्रत्याख्याताया भव्यै रुपलब्धगुणसन्दोहत्वा दाहच–ध्यातसितयेन्पु राणकर्म्म योवागतोनिर्वृतिसौधमूर्द्धनि । ख्यातोनुशास्तापरिनिष्ठितार्थो यःसोस्तुसिद्धःकृतमङ्गलोमे ॥ १ ॥ अत स्तेभ्यो नमः नमस्करणीयता चैषा म विप्रणाशिज्ञानदर्शनसुखवीर्यादिगुणयुक्ततया स्वविषयप्रमोदप्रकर्षोत्पादनेन भव्याना मतीवोपकारहेतुत्वादिति ॥ नमोआयरियाणंति ॥ आ मर्याद या तद्विषयविनयरूपया चर्यन्ते सेव्यन्ते जिनशासनार्थोपदेशकतया तदाकांक्षिभि रित्याचार्याः उक्तञ्च–सुत्तत्थविऊलक्खणजुत्तोगच्छस्समेढिभूओय ।
गणतत्तिविप्पमुक्को अत्थंवाएइआयरिओत्ति ॥ १ ॥ अथवा आचारो ज्ञानाचारादिः पञ्चधा आ मर्यादया वाचारो विहार आचार स्तत्र साधवः स्वयंकरणा त्प्रभाषणात् प्रदर्शना च्चेत्याचार्याः आहच–पंचविहंआयार आयरिमाणातहापयासंता । आयारंदंसंता आयरियातेणवुच्चंति ॥ १ ॥ अ थवा आ ईषत् अपरिपूर्णा इत्यर्थः चारा हेरिका ये ते आचारा चारकल्पा इत्यर्थो युक्तायुक्तविभागनिरूपणनिपुणा विनेया अत स्तेषु साधवो यथा वच्छास्त्रार्थोपदेशकतये त्याचार्या अत स्तेभ्यो नमस्यता चैषा माचारोपदेशकतयोपकारित्वात् ॥ नमोउवज्झायाणंति ॥ उप समीप मागत्य अधीय ते इङ्अध्ययने इतिवचना त्पठ्यते; इणगताविति वचना द्वा अधि आधिक्येन गम्यते; इङ्स्मरणे इतिवचना द्वा स्मर्यते; सूत्रतो जिनप्रवचनं येभ्य स्त उपाध्याया यदाह–बारसंगोजिणक्खाओ सिज्झाओकहिओबुहे । तंउवइस्संतिजम्हा उवज्झायातेणवुच्चंति ॥ १ ॥ अथवा उपाध्यानं उपाधिः सन्निधि स्ते

## णमोआयरियाणं णमोउवज्झायाणं

सिद्धपदवी पाम्या ते । सबकहीये ॥ नमोकहता नमस्कार हुआ केहनेकाजे ? आयरियाणं आचार्यनेकाजे जिनशासननां अर्थ उपदिशे मर्यादादि तेहने वांछके विनयादिकरी सेवीये ते आचार्य कहीये; अथवा ज्ञानादि पंच आचार पोते आ[?] उपदिशे पलावे ते आचार्य ॥ नमोकहतां नमस्कार हु वो केहनेकाजे ? उवज्झायाणं कहता उपाध्यायनेकाजे जे इग्यारेअंग बारेउपांग २३ भणे २४ भणावे २५ पचवीसगुणें सहित [?] जेहने समीपें भ

॥ टीका ॥

यदाह—सोसव्वसुयक्खंधब्भंतरभूओत्ति ॥ अतः शास्त्रस्यादावेव परमेष्ठिपञ्चकनमस्कारमुपदर्शयन्नाह ॥ नमो अरहंताणमित्यादि ॥ तत्र नम इति नैपातिकं पदं द्रव्यभावसङ्कोचार्थं आह च—नेवाइयंपयं दव्वभावसंकोयणपयत्थो ॥ नमः करचरणशिरःसुप्रणिधानरूपो नमस्कारोऽस्त्वित्यर्थः । केभ्यः अर्हद्भ्यः अमरवरविनिर्मिताशोकादिमहाप्रातिहार्यरूपां पूजामर्हन्तीत्यर्हन्तो यदाह—अरिहंतिवंदणनमं सणाणिअरिहंतिपूयसक्कारं । सिद्धिगमणं चअरहा अरहंतातेणवुच्चंति ॥ १ ॥ अतस्तेभ्य इह च चतुर्थ्यर्थे षष्ठी प्राकृतशैलीवशात् अविद्यमानंवा रह एकान्तरूपो देशो अन्तश्च मध्यं गिरिगुहादीनां सर्ववेदितया समस्तवस्तुस्तोमगतप्रच्छन्नत्वस्याभावेन येषान्ते अरहोन्तरो अतस्तेभ्यो ऽरहोन्तर्भ्यो ऽथवा ऽविद्यमानो रथः स्यन्दनः सकलपरिग्रहोपलक्षणभूतो अन्तश्च विनाशो जराद्युपलक्षणभूतो येषान्ते ऽरथान्ता अतस्तेभ्यो ऽथवा ऽरहंताणंति क्वचिद् प्यासक्तिमगच्छद्भ्यः क्षीणरागत्वात् अथवा ऽरहयद्भ्यः प्रकृष्टरागादिहेतुभूतमनोज्ञेतरविषयसम्पर्केऽपि वीतरागत्वादिकं स्वभावमत्यजद्भ्य इत्यर्थः अरिहंताणमिति पाठान्तरम् तत्र कर्मारिहंतृभ्यः आह च—अट्ठविहंपियकम्मं अरिभूयंहोइसयलजीवाणं । तंकम्ममरिहंता अरिहंतातेणवुच्चंति ॥ १ ॥ अरुहंताणमित्यपि पाठान्तरम् तत्र रोहद्भ्यो ऽनुपजायमानेभ्यः क्षीणकर्मबीजत्वात् आह च—दग्धेबीजेयथात्यन्तं प्रादुर्भवतिनांकुरः । कर्मबीजेतथादग्धे नरोहतिभवांकुरः ॥ १ ॥ नमस्करणीयता चैषां भीमभवगहनभ्रमणभीतभूतानामनुपमानन्दरूपपरमपदपुरपथप्रदर्शकत्वेन परमोपकारित्वादिति ॥ नमोसिद्धाणंति ॥ सितं बद्धमष्टप्रकारं कर्मेन्धनं ध्मातं दग्धं जाज्वल्यमानशुक्लध्यानानलेन यैस्ते निरुक्तविधिना सिद्धाः अथवा षिधुगतौ इतिवचनात् सेधन्तिस्म पुनरावृत्त्या निर्वृतिपुरीमगच्छन्

॥ मूल ॥

॥ ॥ णमोअरहंताणं णमोसिद्धाणं

॥ भाषा ॥

पाणिकहीये, भगवतीकहतां पूज्या ॥ हिवेपंचपरमेष्टि नमस्कार मंगलअर्थेकहीयेछे ॥ नमोकहीये नमस्कार हुओ केहने १ अरहंताणं कहता अरहंतनेकाजिते अरहंतशब्दनो अर्थ कहेछे, देवकृत अशोकादिमहाप्रातिहार्यरूप पूजानेयोग्य ते अरहंत कहीये । तथा अष्टकर्मरूप वैरी हण्या ते अरिहंत । तथा अरुहंताण इत्यपिपाठः ॥ नमोकहतां नमस्कारहुओ केहने २ सिद्धाण सिद्धनेकाजे अष्टप्रकारकर्मबंध शुक्लध्यानरूप अग्निकरी ज्वालीने जे मोक्षपहुता

वृत्तय स्ता. प्रज्ञाप्यन्ते यस्याम् २ । अथवा व्याख्यानां सर्वप्रतिपादनाना प्रकृष्टा ज्ञप्तयो ज्ञानानि यस्यां सा व्याख्याप्रज्ञप्तिः ३ । अथवा व्याख्याया अर्थकथनस्य प्रज्ञायाश्च तद्धेतुभूतबोधस्य व्याख्याप्रज्ञा प्रज्ञाया आप्तिः प्राप्तिः आत्तिर्वा आदानं यस्याः सकाशा दसौ व्याख्याप्रज्ञाप्ति र्व्याख्याप्रज्ञा द्वा भगवतः सकाशा दाप्ति रात्तिर्वा गणधरस्य यस्याः सातथा ४ । अथवा विवाहा विविधा विशिष्टावा र्थप्रवाहा नयप्रवाहावा प्रज्ञाप्यन्ते प्ररूप्यन्ते प्रबोध्यन्तेवा यस्या विवाहावा विशिष्टसन्ताना विबाधावा प्रमाणाऽबाधिता प्रज्ञा आप्यन्ते यस्या विबाधा चासौवा प्रज्ञप्ति श्चार्थप्ररूपणा विवाहप्रज्ञप्ति र्विवाहप्रज्ञाप्ति र्विबाधप्रज्ञप्ति र्विबाधप्रज्ञाप्तिर्वा ५ । इयच "भगवती"त्यपि पूज्यत्वेना भिधीयतइति' इह व्याख्यातारः शास्त्रव्याख्याना रम्भे फलयोगमङ्गलसमुदायार्थादीनि द्वाराणि वर्णयन्ति तानिचेहव्याख्यायां विशेषावश्यकादिभ्यो ऽवसेयानि' शास्त्रकारास्तु विघ्नविनायकोपशमनिमित्तं विनेयजनप्रवर्त्तनायच शिष्टजनसमयसमाचरणायवा मङ्गलाभिधेयप्रयोजनसम्बन्धा नुदाहरन्ति' तत्रच सकलकल्याणकारणतया ऽधिकतशास्त्रस्य श्रेयोभूतत्वेन विघ्नाः सम्भवन्तीति तदुपशमनाय मङ्गलान्तरव्यपोहेन भावमङ्गल मुपादेयं मङ्गलान्तरस्या नैकान्तिकत्वा दनात्यन्तिकत्वाच्च भावमङ्गलस्यतु तद्विपरीततया ऽभिलषितार्थसाधनसमर्थत्वेन पूज्यत्वा दाहच–किंपुणतमणेगंतिय मच्चतचणजत्तजिहाणाइं । तव्विवरीयंभावे तेणविसेसेणतपुण्णं ॥ १ ॥ भावमङ्गलस्यच तपःप्रभृतिभेदभिन्नत्वेना नेकविधत्वेपि परमेष्ठिपञ्चकनमस्काररूपं विशेषेणो पादेयं परमेष्ठिनां मङ्गलत्वलोकोत्तमत्वशरण्यत्वाभिधाना दाहच–चत्तारिमंगलमित्यादि ॥ तत्र नमस्कारस्यच सर्वपापप्रणाशकत्वेन सर्वविघ्नोपशमहेतुत्वा दाहच–एषपञ्चनमस्कारः सर्वपापप्रणाशनः । मङ्गलानांचसर्वेषां प्रथमम्भवतिमङ्गलम् ॥ १ ॥ अतएवायं समस्तश्रुतस्कंधाना मादा वुपादीयते अतएवायं तेषा मभ्यन्तरतया भिधीयते

---



श्रीश्रीपरमात्मनेनमः ॥ देवदेवजिननत्वा श्रुत्वाचश्रुतदेवतां । वार्त्तिकपचमांगस्य वच्येहव्यनुसारतः ॥ १ ॥ समवायनामे चौथोअंग कह्यो, हिवे वियाहपन्नत्तीनाम पचमांगकहोयेछे ॥ ते विवाहपन्नत्ती स्यूंकहीये ? विविधकहतां नानाप्रकार जीवादिपदार्थ श्रीमहावीर देवें गौतमादिशिष्यैंपूछ्या प्रश्नपदार्थ तेप्रकाश्य. तेविवाहपन्नत्तीकहीये; अथवा विविधकहतां समूहअर्थनां प्रवाहनयनां प्रवाहभूरूपीये जेहमेंविषे तिका विवाहपन्नत्तीकहीये, वली एह भगवती

॥ श्रीमदाप्ताय नमः ॥ श्रीजिनायनमः ॥ सर्वज्ञमीश्वरमनन्तमसङ्गमग्र्यं सार्वीयमस्मरमनीशमनीहमिद्धम् । सिद्धंशिवंशिवकरंकरणव्यपेतं श्रीमज्जिनंजितरिपुंप्रयतःप्रणौमि ॥ १ ॥ नत्वाश्रीवर्द्धमानाय श्रीमतेचसुधर्मणे । सर्वानुयोगवृद्धेभ्यो वाण्यैसर्वविदस्तथा ॥ २ ॥ एतट्टीकाचूर्णी जीवाभिगमादिवृत्तिलेशांश्च । संयोज्यपञ्चमाङ्गं विवृणोमिविशेषतःकिञ्चित् ॥ ३ ॥ व्याख्यातं समवायाख्यं चतुर्थमङ्ग मथावसरायातस्य विवाहपण्णत्तिरिति सञ्ज्ञितस्य पञ्चमाङ्गस्य समुन्नतजयकुञ्जरस्येव ललितपदपद्धतिप्रबुद्धजनमनोरञ्जकस्य उपसर्गनिपाताव्ययस्वरूपस्य घनोदारशब्दस्यलिङ्गविभक्तियुक्तस्य सदाख्यातस्यसल्लक्षणस्य देवताधिष्ठितस्य सुवर्णमण्डितोद्देशकस्य नानाविधाद्भुतप्रवरचरितस्य षट्त्रिंशत्प्रश्नसहस्रप्रमाणसूत्रदेहस्य चतुरनुयोगचरणस्य ज्ञानचरणनयनयुगलस्य द्रव्यास्तिकपर्यायास्तिकनयद्वितयदन्तमुसलस्य निश्चयव्यवहारनयसमुन्नतकुम्भद्वयस्य योगक्षेमकर्णयुगलस्य प्रस्तावनावचनरचनाप्रकाण्डशुण्डादण्डस्य निगमनवचनातुच्छपुच्छस्य कालाद्यष्टप्रकारप्रवचनोपचारचारुपरिकरस्य उत्सर्गापवादवादसमुच्छलदतुच्छघण्टायुगलघोषस्य यशःपटहप्रतिरवापूर्णदिक्चक्रवालस्य स्याद्वादविशदाङ्कुशवशीकृतस्य विविधहेतुहेतिसमूहसमन्वितस्य मिथ्यात्वाज्ञानाविरमणलक्षणरिपुबलदलनाय श्रीमन्महावीरमहाराजेन नियुक्तस्य बलनियुक्तकल्पगणनायकमतिप्रकल्पितस्य मुनियोधैरनावाधमधिगमाय पूर्वमुनिशिल्पिकल्पितयोर्बहुप्रवरगुणत्वेपिह्रस्वतया महतामेव वाञ्छितवस्तुसाधनसमर्थयो र्वृत्तिचूर्णिनाडिकयो स्तदन्येपाञ्च जीवाभिगमादिविविधविवरणादवरकलेशानां सङ्घटनेन वृहत्तरा अतएवा महता मप्युपकारिणी हस्तिनायकादेशादिव गुरुजनवचना त्पूर्वसुनिशिल्पिकुलोत्पन्नै रस्माभि र्नाडिकेवेय वृत्ति रारभ्यत इति शास्त्रप्रस्तावना' अथ विवाहपण्णत्तिति कःशब्दार्थ ? उच्यते-विविधा जीवाजीवादिप्रचुरतरपदार्थविषया आ अभिविधिना कथञ्चि न्निखिलज्ञेयव्याप्त्या मर्यादयावा परस्परासङ्कीर्णलक्षणाभिधानरूपया ख्यानानि भगवतो महावीरस्य गौतमादिविनेयान् प्रति प्रश्नितपदार्थप्रतिपादनानि व्याख्या स्ताः प्रज्ञाप्यन्ते प्ररूप्यन्ते भगवता सुधर्मस्वामिना जम्बूनामान मभि यस्यान् १ । अथवा विविधतया विशेषेणवा आख्यायतइति व्याख्या अभिलाप्यपदार्थ